# पञ्चविधसूत्रम्

## प्रथमः प्रपाठकः

### प्रथमा खण्डिका

प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः १ तत्पाञ्चविध्यं स्मृतं व्याख्यास्यामः २ ओंकारहिंकाराभ्यां साप्तविध्यम् ३ अवसानं पूर्वं प्रस्ताव आद्योत्पत्तिषु ४ स्वादीन्दुःपप्रारेवत्यादीनि ५ किं यदिन्द्रेन्द्रमा ६ वैधेषु तु विधैव नाद्यमवसानम् ७ इदंते शन्नो वित्वद् असाविप्रभृतीनि ८ आनोमि कदा प्रत्युअ त्यमू द्वितीये प्रतिसाम विधाविकाराः ९ निधनवती तु स्तोभपर्वोपायिनी १० जातःपरेण सौमित्रंधर्मविधर्मायावीती पुना परीतोऽयाप पञ्चनिधनो-दुत्यंकश्यपपुच्छऋृषभादीनि च ११ निवृत्तानि नकि तिस्रः परीत इन्द्रायसन्तन्यतीषङ्गस्वादोः श्येनादिषु पूर्वावसानप्रस्तावानि १२ सर्वासु पूर्वमित्येके कईं शन्नो वित्वत्प्रभृतीनि १३ द्विविधे पादे पूर्वोभे वा वृषाप त्वावत इन्द्रायेन्दो प्रधन्वा सव् इन्द्रामिन्द्रं सघायस्तेऽचिक्र तत्तद् आद्या धर्तायाम् १४ पूर्वं चेदपदान्त्यं सामपर्व सदृशोत्तरमाश्वा यज्ञातृतीये प्रासो उपह्वरे वयम्यादौ हुवे होइ य एक इद्वारान्तो वा चन्द्रमाद्य उच्चाद्वितीये द्वादशाक्षरो वा स्वादिप्रथम इन्द्रायेन्दवा ते दक्षं तं वः सैतमुत्यं वृषके चातूऔहो १५

इति पञ्चविधसूत्रे प्रथमप्रपाठके प्रथमा खण्डिका १

### द्वितीया खण्डिका

सकृदावत्तौ पदविभाग्यमयंपू प्रोअया कश्यपद्वितीयेऽभित्वा १ अनुदूह्या पादगीतिरन्यत्र । त्रातारं प्रभृतीनि । सखेन्दुरेषस्य २ एष ब्रह्मौ पर्व विभाग्यम् । इन्द्रोवि द्व्यक्षरः ३ त्र्यक्षर उत्तरे ४ उपोषुद्वितीय एकाक्षरोऽष्टाक्षरो वा ५ अर्षेति पर्व पादो वा ६ अपघ्नन् पेति स्वारान्तः ७ इन्द्रम चतुर्थेऽष्टादशाक्षरः ८ रैवतऋृषभे षट्त्रिंशत्

९ वैराजे तृतीयान्तः १० संकृतौ पर्व पादो वा ११ वाचोद्वितीये चत्वार्यष्टौ वा १२ राथन्तरस्त्रिरुक्तं चेलान्दाद्ये १३ कश्यपग्रीवा-हृदयेडानां संद्मारेषु १४ देवव्रतेषु नमोऽन्तः सर्वत्र १५ निह्नवे त्रि-रुक्तम् १६ परे चाष्टौ १७ दिवाकीर्त्य आदावुपायान्तः १८ आत्मनि विधान्तः १९ समैरयेष्वष्टाक्षरः २० आदित्यात्मनि चित्रमन्तः २१ चक्षुष्येकाक्षरो द्वे चेद् २२ वचनम् २३ उन्नये त्रिरुक्तम् २४ महानाम्न्यो द्विप्रस्तावाः २५ द्विपदायां शाक्वरे च २६ अध्यास्यायां जारा २७ पुरीषपदेषु च । पुरीषपदेषु च २८

इति पञ्चविधसूत्रे प्रथमप्रपाठके द्वितीया खण्डिका

## तृतीया खण्डिका

उत्तमपादादौ पर्व प्रतिहारः स न्याय्यः १ बृहद्रथन्तरयोश्च निदर्शनात् । नाइहोतासा तपारमादीनि २ तदादि चेदनेकं प्रागुपायात्पर्वणां विकल्पोऽवान्तानाम् ३ अग्नाइ रा३था३म् कया २३ शचाइ द्वा-इषस्ताराऽ२ न्याय्यस्य ४ अवान्तानामिति कस्मात् । सहो वा मयो वा ५ पूर्वं चेदवृद्धान्त्यं सह तेन वारातेर्ध्वमुपवापृणध्वं प्रवायाँ होतामज्योतींषि प्रभृतीनि ६ त्रिष्टुब्जगत्योश्चोपान्त्यं पदं वा ७ दिवेदि मातेराश्वमासूर्यादीनि ८ द्वे चेत्सदृशान्ते ९ हीष्यौ तृम्पे माध्वा
२ र १
वाग्नेसानीँहो यावा इन्द्रे च १० असंभवान्निधनपरे विशे वाइशेऽ२ ।
२ र १ २ र १
याँसादीनि । वृषावृषाऽ२ । द्रवा पाइ बा२ । क्षितो तायार२ः ।
२ र १ १ १र ऽ२
महाँहाइषा २ । जनुषा २ धा रा २ ११ स्तोभः परोऽविदूरात्प्रतिहारस्य १२ ये चोग्रमादीनि १३ अनेहिहुवेहुम्मा श्यैत और्णायवयोश्च १४ निवृत्तानि दिवस्पायौ १५ सखायआशंयद्वादीनि च १६ पूर्वश्च विधाया विदूरान्निधनाच्च कस्यनूतमिन्द्रंयदिन्द्राहमिमाउत्वावो-इपन्ययादीन्यौ होऽ१ अग्ने राथाऽ२३ मौहौहोऽ१ इन्दूराऽ १ इन्द्राऽ२ ओइकारो वृत्राण्योजिष्ठं पवस्वासोतेति च १७

इति पञ्चविधसूत्रे प्रथमप्रपाठके तृतीया खण्डिका ३

## चतुर्थी खण्डिका

प्रतिहारसदृशं चाप्रस्तावो निधनवतीषु न चेदुद्गीथादिर्नकितिस्त्रः- प्रभृतीनि १ अनुद्गीथादिरिति कस्मात् २ प्रव इन्द्रैष ब्रह्मा ३ सौमि- त्रादीनि स्तोभविभाग्यानि ४ भूयिष्ठपदसदृशगीतानि विभाग्यानि ५ आद्यन्तयोस्तु विकारो नान्यत्वकरः ६ अक्षरेण चौनाधिक्यम् ७ तेषूपान्त्यः पादगीतिरिदंतेप्रभृतीनि ८ ऋक्समे द्वैधमुत्तमं बहिर्निधने ९ कदाग्निमीडे न्याय्यस्य १० त्रैधमन्तर्निधने गोषाताविकोशं न्या- य्यस्य ११ त्रिपदास्वत्यृचमावृत्तास्वन्त्या पादगीतिः १२ शन्नो- यद्वीकयानासु प्रिये शुक्रचन्द्रयोः सर्पराज्ञीष्वानन्दप्रतिनन्दयोरिन्द्रस्य रोचने १३ अन्ये चेदभ्यासः प्राङ्निधनादन्त्ययोः पदयोर्विकल्पोद्रिवो वचो राजा तुविद्युग्नम् १४ कृत्स्नेऽभ्यास उत्तरेऽन्त्यधर्मश्चक्राणाओऽ२३ सूनूँसत्याऽ ३१२३ उद्वँशाऽ २३४ मी १५ एष न्यायोऽसप्तिसामपर्व । यजिष्ठमृञ्जसे ३ हाइ योस्याऽ ३ हाइ त्वाँसाऽ२३सुनूऽ३ँहोइ । सत्योऽ२३४ हा याजाऽ३हाऽ३ग्माऽ३ याइ १६

इति पञ्चविधसूत्रे प्रथमप्रपाठके चतुर्थी खण्डिका ४

## अथ पञ्चमी कण्डिका

अथानुक्रमणं विकल्पार्थम् १ स्मृतानां च २ अस्य या२३ज्ञा ३ द्वौ चेदस्तोभौ ४ विधा वा ५ एवं सर्वेषु वैधेषु येषूत्तमपादाद्यन्त्या विधा प्रस्तावश्चान्यस्त्रयो विकल्पा होताम दिवि सं यद्वाहि । प्रहोत्रे पादु भद्रं भद्रमामन्द्रैर्ब्राह्मणादीनि च ६ इन्द्रमित्साकं लक्षणशेषे याव- द्वचनः ७ समिद्धस्तोभान्तः ८ स्तुषे मित्रमिव प्राऽ२३याम् ९ तस्य निर्योक्ता यदुद्गीथाद्वर्षीयान् १० तस्माज्जरत्पर्वाग्नायेऽ३ ११ मनोभिः सम्राजन्ताम् १२ एका चेदाश्वा प्रस्तावो द्विप्रतिहारम् १३ सम्रा-

जन्तामित्युत्तमे १४ वान्तो वा १५ उहुवादिर्वा पदान्तः १६ इहाहेति वा स्तोभावगातॄणां तस्य नियोक्ता १७ होऽ२३४र्तियाः १८ असंभवो वाग्नाद्वितीयपादादौ १९ परं वा चतुरक्षरमग्निस्ति भिन्धिसदसोऽसावि दाऽ३ साइम् २० ऊर्जां पता चतासृभा इति च स्तोभान्तौ २१ पाहि हा वा २२ आजातासौ द्विःकृष्टान्तः २३ कायमा द्वितीये तृतीयः पादो होइकारान्तः २४ ओइ प्राना ओ२३४ वा २५ द्वौ चेत् स्तोभादी द्व्यक्षरम् २६ पवस्वासोतेति च २७ वासाऽ३ उवा २८ पूर्वा वा विधा २९ ओहुवाइशूऽ२३४ षा ३० परो वा पूर्वं वा ३१ उष्णिग्द्वतिक्रान्तो न्याय्यः ३२ पूर्वेषां विकल्पो महाऽ२३ होये नाऽ२३ वेऽ२३ ३३ एष न्याय्यः ३४ अस्माइ देहि जातवेदः ३५ श्रुधियेति वा ३६ हव्येति न तस्य ३७

इति पञ्चविधसूत्रे प्रथमप्रपाठके पञ्चमी खण्डिका ५

## अथ षष्ठी खण्डिका

शंयत् । हा । औ३होइ । गाऽ२३४ वाइ १ इन्द्रा औऽहो२३४ । ग्नाइ २ येषामिन्द्रोयुवाइहा । ऊवाइ । ऊवो२३४ वा ३ न्याय्यो वा षडक्षरः ४ इहान्तो वा ५ नियामञ्चाइ । त्रमा२र्ञ्जा २३४ ताइ ६ नारमोइ । नृ । षाहमोऽइ ७ ओन्तस्त्र्यक्षरश्चतुरक्षरो वा ८ नरनृषाहंमा ९ नरंनृषाहम् । मा५ँहिष्ठाम् १० यवाशा२३ इराः ११ यवाशाइराः १२ पूर्वं वैनयोः पर्व १३ अत्राह पर्यापवस्वेति मध्यमः पादः १४ शा३ ताक्रा३ तूम् इति वा १५ मँहिष्ठंचर्षणाये३ इति वा १६ दा३ नाम् । या३ ता १७ परेषु चतुर्षु चतुरक्षरमुत्तम-पादादौ सस्तोभम् १८ सखाय आ । हयाइ । साखायः स्तोमवा औहो । पिबा तुवस्या गवा हाइ । जघान नवतीर्नव इया । ओज-स्तदस्य हाशब्दः १९ यत्सो वाजी पूर्वोऽभ्यासः । परो वा २०

इति पञ्चविधसूत्रे प्रथमे प्रपाठके षष्ठी खण्डिका

## सप्तमी खण्डिका

अभि त्वाश्वां द्वितीये तृतीयः पादः १ त्वां वृत्रेषु पत्यन्तः २ पुरुहूतन्नमे गाइरा ३ नेमिन्तष्टे वासा ४ पूर्वा वा विधा ५ नेमिं क्रीडन् कृष्टान्तः ६ ऐहोइगाऽ२विष्टयाइ ७ परो वा कृष्टान्तः ८ सर्वत्रैव नेम्याम् ९ आइहियाइ । गविष्टयाऽ२इ १० न्याय्यस्त्र्यक्षरः ११ षडक्षरो वा १२ सा चा उवा । सूताउवा । द्विप्रतिहारम् १३ न्याय्यो वा १४ वहन्तुसोमपौहो३ । हुंमा२ १५ विपश्चितो अभिस्तोमैः इहाहाहोइ । इहोऽ२३४ वा १६ वाजयन्तो रथाः । इवोऽ२३४ हाइ १७ न हि त्वा यशाऽ३ सांवसू । वीऽ२३४दाम् १८ स्तोत्रँ राजसु गायतस्तोऽ२३ त्राम् १९ द्व्यक्षरो वाभ्यासादिः २० द्युम्नमाभरा इति च स्तोभान्तः २१ त्वागीर्भिर्द्युगदिन्द्राके१शिभी२ः २२ पुरंदरा । प्रगायात्रा२ः इति सस्तोभः २३ उत्तरे च २४ द्वितीयपदनिधनेषु तृतीयः पादः २५ वयमेन यदा कदा यत्सोऽभीनो २६ वयमेद्वितीये तृतीयः पादः २७ ज्या इष्ठं यो वा । त्राहागाऽ२३४र्णाइ २८ रथा-इतममतूर्त्ताऽ२३४न्तू २९ राथा इति वा ३० रथीतमा२मतूर्ताऽ२३४न्तू ३१ विपागिरौ वा ओऽ२३४ वा । धर्तारंव्यौवाओ२३४ वा ३२

इति पञ्चविधसूत्रे प्रथमे प्रपाठके सप्तमी खण्डिका

प्रथमः प्रपाठकः समाप्तः

## द्वितीयः प्रपाठकः

## प्रथमा खण्डिका

वार्द्धा३ः श्चाइद्दोवसू होवा १ वर्चांसिया । स्माऽ३ इस्थवि । रायतक्षुः २ परो वा षडक्षरोऽवद्रप्सद्वितीयतृतीययोः सिद्धः ३ सस्तोभतृतीये ४ कृणुध्वमिहाऽ२वाऽ२३४इशाः ५ पूर्वीरिति वा ६ ब्रह्माणस्त्वा शताऽ१क्राऽ३तो । ब्रह्माणस्त्वोऽ२३४ हाइ ७ उतोहाइ ८ सर्वं वा पदं परं वा पर्व ९ एकाक्षर ओयेऽ३ १० पाऽ३ना इति

चोपद्रवः ११ आइशानो अप्रतिष्कुतः । आइशा । नो अप्रताइ । ष्कूऽ२३४ ताः इति वा १२ नार्ताऽ३माऽ३ । होवा३हा३ १३ ष्णावा संस्तोभः पूर्वा १४ यद्धँसिवृ । त्रमोऽ२३ १५ अयाँ᳚साऽ३सो १६ पीति वैकाक्षरः १७ सोतुर्बाहुभ्याम् । सुयताऽ३ः । सुयताऽ३ः १८ न्याय्यो वा पञ्चाक्षरः परो वाभ्यासिके त्रयो विकल्पाः १९ स्तुषाइ । सखाय आऽ२३हाइ २० अभ्यासो निना । यताऽ३मूऽ३वस्तुषाइ २१ न्याय्यस्त्र्यक्षरश्चतुरक्षरो वा २२

इति पञ्चविधसूत्रे द्वितीयप्रपाठकस्य प्रथमा खण्डिका १

## द्वितीया खण्डिका

पङ्क्तिषु वैधेषूत्तमपादादौ विप्रतिपत्त्यां चतुर्थी पदगीतिर्न्याय्यो वा स्वादोरिन्द्रोम प्रेहि १ पूष्णोऽ३ होइ । भगाऽ२३४ या २ पूष्णे भगायेति वा । पूष्णो३४३ होऽ२३४ इति वा ३ धर्मविधर्म-णोर्द्विपदाकारम् ऋचः परं द्वौ स्तोभौ ४ अक्षरपङ्क्तिषु सिद्धस्तृतीयः पादो निधनपरे ५ अनिधनपरेऽपि ६ र्यराज्ये । वाजाँ᳚अभिपवमान । पवमाना ७ ऋचः परमोऽ३हाऽ३४३ । ओऽ३४ हा । एषा ब्रह्मा ८ न स्पृशत् ९ पुष्ये म चतुरक्षरमृचः परम् १० शिवो भुवाऽ२३ स्नाताऽ३ गूर्दादीनां चतुर्णाम् ११ अग्निर्महोऽ२३ नाऽ३ १२ तस्य निर्योक्ता यदुद्गीथाद्वर्षीयांस्तस्माद्दानूसू इति पञ्चानाम् १३ पीवरीं दशाक्षरम् १४ इन्द्रो वि द्व्यक्षरशो विभागः १५ एकाक्षरनिधने चतुरक्षर उद्गीथः १६ उत्तरे स्य राजति १७ द्व्यक्षरो वा स्तोभः १८

इति पञ्चविधसूत्रे द्वितीयप्रपाठकस्य द्वितीया खण्डिका २

## तृतीया खण्डिका

महाऽ२ हाऽ२ इ । औऽ३ होऽ३१ इ । श्रवाऽ२ः । हाऽ२ इ । औऽ३ होऽ३१ इ १ पूर्वं वैनयोर्वचनम् २ गम्भीरे पादवद्वृत्तिः ३

इन्द्रायेन्दो द्वितीय आऽ२३४र्का ४ ओवाऽ२३ । ओवाऽ२३ । पूर्व उद्गीथः ५ उपोषु प्रथमे तृतीयपादाद्यः स्तोभः । षडक्षरं चार्चिकम् ६ अवाहन्ना पञ्चाक्षरशः स्तोभः ७ पुनानद्वादशे चतुर्थपादाद्यः स्तोभः ८ परीतान्त्ययोश्च ९ अच्छाकोशाम्मधौ होऽ३ । हुम्माऽ२ १० येवहरितायाताइधा१ रायाऽ२ ११ व्रतः शुचिबन्धुः प३वाकः । पा२३४ दा १२ अपश्वानँ श्नथा१ इष्टा३ ना १३ न्याय्यो वाष्टाऽ२३४ ना १४ परो वा स्तोभादिः प्रत्युत्क्रान्तः १५ पवाइत्र वाऽ३न्तोऽ३ । एऽ३ । क्षरन्ना । दाइवान् गच्छा३न् १६ द्व्यक्षरो वा १७ देवान् गच्छा १८ देवऽ३न्होइ । गच्छो २३४ हा १९ श्रुष्टाइजाता । सइन्दवाः २० आ इन्दाऽ३ वाऽ३ः २१ दावाऽ२३ः २२ स इन्दवः सुवा २३ श्रुष्टाइ २४ चतुरक्षरो वा २५ शाइशा ओ२३४ वा २६ द्वौ चेच्छाइशौ २७ पवा३२ । मा२३४नाः २८ पवमा२३ ना३ः २९ गमधिगो२३४ औहोवा ३० गमभिवा२३ ३१ नेतायः ३२ अपा३म् । हुम्३वा३ ३३ एकाक्षरश्चोपद्रवः ३४ न्याय्यो वा । न्याय्यो वा ३५

इति पञ्चविधसूत्रे द्वितीये प्रपाठके तृतीया खण्डिका ३

## चतुर्थी खण्डिका

वैरूपतृतीयादीनामन्त्या पादगीतिः १ उपान्त्या वा विधा २ बहिर्ऋचन्तु ३ तथा परे विश्वतः ४ सहोमहसोः स्वरीयसां तृतीयेऽन्त्यानुगानद्वितीयतृतीयेषु च ५ वैरूपाष्टमेऽन्त्यः पादश्चतुरुक्तः सस्तोभः ६ अभित्वेन्द्रो रेति वैधवत् ७ यस्येदमिति द्वितीयः पादः ८ तृतीयस्य वा त्र्यक्षरम् ९ ऋषभेऽन्त्ये त्रिरुक्ते मध्यमं वचनम् १० अतीषङ्गं सिद्धः ११ अन्धाश्च १२ नित्यवत्सा । शक्वरीषु च त्रिरुक्ते १३ गं कृणुतेति पञ्चाकरम् १४ परं वातस्त्रिरुक्तम् १५ परस्य वा त्रिरुक्तस्य द्विरुक्तम् १६ मध्यमं वा वचनम् १७ सिद्धो विद्रथस्य

प्रतिहारः १८ वैराजस्योत्तमे पदे मध्यमं वचनं सस्तोभम् १९ वैधवद्वा २० अयं पूषाद्ययोस्तृतीयस्य पादस्याभ्यासः २१ यरावापत्ययोरुत्तरयोः स्तोत्रीययोर्मध्यमं पदं सस्तोभम् २२ अन्त्ययोर्वा पदयोश्चतुरक्षरं यरावस्य २३ सर्वास्वपत्यस्य २४ पञ्चाक्षर ओवान्तश्चतुः पार्थुरश्मस्य २५ अभ्यस्तो वृषकस्य तथैव २६ भद्रश्रेयसोरुत्तरयोर्विधयोर्मध्यमं वचनम् २७ वृषान्याय्यो वा २८ द्विप्रतिहारे तथा च २९ स्वराणामादितस्त्रयाणामुत्तमपादादौ चतुरक्षरम् ३० उपान्त्या वा पादगीतिरेकेषाम् ३१

इति पञ्चविधसूत्रे द्वितीये प्रपाठके चतुर्थी खण्डिका ४

## पञ्चमी खण्डिका

वाचोव्रते रमतां सप्ताक्षरः १ द्वितीये चतुरक्षरः २ सत्रस्यर्द्धिन्यायेषु स्तोभसामसूपान्त्या विधा ३ सिद्धोऽग्निमीडे गवांव्रते ४ इलान्दाद्ये कश्यपग्रीवाहृदयेडानांसंक्षारेषु वृषावद्रयिं वर्च इति हुम्मान्तः ५ देवव्रतेषु षडक्षर इडाभान्तः ६ निह्नवाभिनिह्नवयोः प्रागुपायात्पर्व ७ दिवाकीर्त्यस्यात्मनि तृतीया विधा ८ समैरयेषु विभाग्यः ९ आदित्यात्मनि चतुर्थः पादः पूर्वश्च स्तोभः १० परिधिषु यराववदुपान्त्या वा पादगीतिरेकेषाम् ११ मित्रावरुणयोरुपान्त्ये त्रिरुक्ते मध्यमं वचनम् १२ वृषावद्वा १३ उन्नये च वृषावत् १४ शक्वरीषु होन्तः । शक्वरीषु होन्तः १५

इति पञ्चविधसूत्रे द्वितीये प्रपाठके पञ्चमी खण्डिका ५

## षष्ठी खण्डिका

निधनं पर्व सामान्त्यम् १ जातःप्रभृतीनि वासुवद्रवां जायताइवा न्याय्यस्य २ अन्त्यसदृशमन्तस्साम्नि जातःपरेण नकि त्वंहत्यद् उभे यद् अग्निंनेन्द्रायेन्दो सुतासोमप्रथमे च ३ अक्षरं तु वाग्घाइकारः

परिस्वारः । परं वातिस्वार्यात् आदित्प्रियंभगायादीनि । दायो सूगो होतोहा प्रभृतीनीयेथादीनि च ४ ओइडाहोइडेति द्व्यक्षरमेकाक्षरं वा शीकोयादिषु च ५ एषानुनूतेति श्रुतिः ६ होइडाभ्यासे संदर्भः ७ सर्वासां वान्त्यम् ८ अन्त्याया वा ९ डैवेमं स्तो त्वावतो विधान्याय्यत्वात् १० पीति वा संभवात् ११ अर्धेडा सर्वत्र १२ रोहादिहोपाथेडोपोष्वतीषङ्गादीनां १३ इहान्धा सर्वत्र तिग्मेन प्रभृतीनि १४ वारवन्तीये परीताष्टामे च पर्वान्तरत्वान्न १५ नेम्या हीषी नेमिःप्रभृतीनि १६ मन्द्रात् ष्ठाविवक्षणादीनि १७

इति पञ्चविधसूत्रे द्वितीये प्रपाठके षष्ठी खण्डिका ६

## सप्तमी खण्डिका

अथोपायाः १ पूर्वां चेदौहो वा मन्द्रस्वरा २ महाहा ३ हीष्यन्ताश्च ४ ओवा च विस्वरादिनि ५ अवाचः ६ वागाउकारपूर्वा ७ हुम्मा मन्द्रवद्वैसर्यम् निधनं च ८ तेभ्यः ष्ठाहीषीप्रथमोच्चानि वाजा चान्धा च सामा च ९ आत्वासोप्रभृतीनि हिन्वन्नृशुक्रा यःकाओजस्तदादयो हुम्माक्षवे शृणाह्यादीन्यग्निर्वृत्रादीनि १० नाँष्ठादाश्च ११ पयसि विकर्णे शुक्रियोपान्त्ये १२ ऋषभचतुस्त्रिंशयोः १३ शन्नः प्रभृतीनि १४ अन्तरिक्षादीनि च १५ आर्चिकमपादान्त्यमेकेषां वा १६ देवा-प्रभृतीनि १७ तविषाम् १८ पवमा १९ मयि वर्चः २० वार्त्रघ्ने २१ उवेकारौइकारा व्यवयन्तो विघातका निधनाङ्गं च २२ उष्णि-गष्टान्तः २३ न विधादिस्त्वांवृत्रेषु परीतः पवते २४ ददाशान्तम् २५ ऋषीणां मान्तम् २६ गोभिष्टे वान्तम् २७ बाधो जहीति पर्व २८ इहेव त्रीणि वा २९ आतून इहकारः ३० रथीनां च सुहव्यम् ३१ यो रयिं पवस्व हीषीप्रथमोच्चे ३२ प्रथमोच्चं वा ३३ अयाप इह इहिया त्रिरुक्तम् ३४ प्रथः कपे च ३५ दिवाकीर्त्ये मदायाः ३६ पुरीषपदेषु च ३७ दिक्शब्दः स्वरेषु ३८ हृदये त्रिरुक्तं प्राग्वचः ३९

आनन्दप्रतिनन्दयोः ४० त्रिरुक्तमन्त्यमुद्गीथोऽन्यः ४१ उपायो यस्मान्नोर्ध्वं प्रतिहारः ४२ निधनं प्रत्यङ्गम् ४३ इतरेषां यथोक्तम् । यथोक्तम् ४४

इति पञ्चविधसूत्रे द्वितीये प्रपाठके सप्तमी खण्डिका ७

द्वितीयः प्रपाठकः समाप्तः पञ्चविधसूत्रं समाप्तम्

Reference:

Sharma, Bellikoth Ramachandra, ed., *Pancavidha-Sutra with Commentary,* (Tirupati: Kendriya Sanskrit Vidyapeetha, 1970).